एतद्‌यो न विजानाति मार्गद्वितयमात्मवान्।
दन्दशूकः पतङ्गो वा भवेत् कीटोऽथवा कृमिः॥ १९७

ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम्।
उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा॥ १९८

निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन्।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः॥ १९९

सन्निरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः।
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत्॥ २००

ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः।
धारयेत्तत्र चात्मानं धारणां धारयन् बुधः॥ २०१

अन्तर्द्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा।
निजं शरीरमुत्सृज्य परकायप्रवेशनम्॥ २०२

अर्थानां छन्दतः सृष्टिर्योगसिद्धेस्तु लक्षणम्।
सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते॥ २०३

अथवाप्यभ्यसन् वेदं न्यस्तकामो वने वसन्।
अयाचिताशो मितभुक् परां सिद्धिमवाप्नुयात्॥ २०४

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते॥ १०५

इत्यध्यात्मप्रकरणम्।

महापातकजान् घोरान् नरकान् प्राप्य गर्हितान्।
कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह॥ २०६

मृगश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति।
खरपुक्कसवेनानां सुरापो नात्र संशयः॥ २०७

कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात्।
तृणगुल्मलतात्वञ्च क्रमशो गुरुतल्पगः॥ २०८
ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः।
हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः॥ २०९
यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते।
अन्नहर्त्तामयावी स्यान्मूको वागपहारकः॥ २१०
धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः।
तैलहृत्तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः॥ २११
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च।
अरण्ये निर्ज्जने घोरे भवति ब्रह्मराक्षसः॥ २१२
हीनाजाती प्रजायेत पररत्नापहारकः।
पत्रशाकं शिखी हृत्वा गन्धांश्छुच्छुन्दरिः शुभान्॥ २१३
...विको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः।
जलं प्लवः पयः काको गृहकारी ह्युपस्करम्॥ २१४
मधु दंशः पलं गृध्रो गां गोधाग्निं वकस्तथा।
श्वित्री वस्त्रं श्वा रसन्तु चीरी लवणहारकः॥ २१५
प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्म्मणि।
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः॥ २१६
यथा कर्म्मफलं प्राप्य तिर्य्यक्त्वं कालपर्य्ययात्।
जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः॥ २१७
ततो निष्कल्मषीभूताः कुले महति योगिनः।
जायन्ते विद्ययोपेता धनधान्यसमन्विताः॥ २१८
विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥ २१९

तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति॥ २२०
प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान्॥ २२१
तामिस्रं लोहशङ्कुञ्च महानिरयशाल्मली।
रौरवं कुट्मलं पूतिमृत्तिकं कालसूत्रकम्॥ २२२
सङ्घातं लोहितोदञ्च सविषं सम्प्रतापनम्।
महानरककाकोलं सञ्जीवनमहापथम्॥ २२३
अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च।
असिपत्रवनञ्चैव तापनञ्चैकविंशकम्॥ २२४
महापातकजैर्घोरैरुपपातकजैस्तथा।
अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः २२५
प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्।
कामतोऽव्यवहार्य्यस्तु वचनादिह जायते॥ २२६
ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च।
एते महापातकिनो यश्च तैः सह संवसेत्॥ २२७
गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम्॥ २२८
निषिद्धभक्षणं जैह्म्यमुत्कर्षश्च वचोऽनृतम्।
रजस्वलामुखास्वादः सुरापानसमानि तु॥ २२९
अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा।
निक्षेपस्य च सर्व्वं हि सुवर्णस्तेयसम्मितम्॥ २३०
सखिभार्य्याकुमारीषु स्वयोनिष्वन्त्यजासु च।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्॥ २३१

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा॥ २३२
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि॥ २३३
गोवधो व्रात्यता स्तेयमृणानाञ्चानपक्रिया।
अनाहिताग्नितापण्यविक्रयः परिवेदनम्॥ २३४
भृताद्ध्ययनादानं भृतकाध्यापनं तथा।
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया॥ २३५
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः॥ २३६
धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम्।
पितृमातृगुरुत्यागस्तड़ागारामविक्रयः॥ २३७
कन्यासन्दूषणञ्चैव परिवेदकयाजनम्।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्॥ २३८
आत्मार्थे च क्रियारम्भो मद्यपस्त्रीनिषेवणम्।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च॥ २३९
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधिजीवनम्।
हिंसायन्त्रविधानञ्च व्यसनान्यात्मविक्रयः॥ २४०
शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्।
तथैवानाश्रमे वासः परान्नपरिपुष्टता॥ २४१
असच्छास्त्राधिगमनमाकरेष्वधिकारिता।
भार्य्याया विक्रयश्चैषामेकैकमुपपातकम्॥ २४२
शिरःकपाली ध्वजवान् भिक्षाशी कर्म्म वेदयन्।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्॥ २४३

ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य वा ।
तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ २४४
दीर्घतीव्रामयग्रस्तं ब्राह्मनं गामथापि वा ।
दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः ॥ २४५
आनीय विप्रसर्व्वस्वं हृतं घातित एव वा ।
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुध्यति ॥ २४६
लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम् ।
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ॥ २४७
संग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात् ।
मृतकल्पः प्रहारार्त्तो जीवन्नपि विशुध्यति ॥ २४८
अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम् ।
मुच्यते वा मिताशित्वा प्रतिस्रोतः सरस्वतीम् ॥ २४९
पात्रे धनं वा पर्य्याप्तं दत्त्वा शुद्धिमवाप्नुयात् ।
आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी स्मृता ॥ २५०
यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणो व्रतम् ।
गर्भहा च यथावर्णं तथात्रेयीनिसूदकः ॥ २५१
चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागतः ।
द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् ॥ २५२
सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् ।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥ २५३
वालवासा जटी वापि ब्रह्महत्याव्रतञ्चरेत् ।
पिण्याकं वा कणां वापि भक्षयेत्त्रिसमा निशि ॥ २५४
अज्ञानात् तु सुरां पीत्वा रेतोविण्मूत्रमेव वा ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २५५

पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्।
इहैव तु शुनी गृध्री शूकरी चाभिजायते॥ २५६

ब्राह्मणस्वर्णहारी तु राज्ञे मुषलमर्पयेत्।
स्वकर्म्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः॥ २५७

अनिवेद्य नृपे शुध्येत् सुरापव्रतमाचरन्।
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत्॥ २५८

तप्तेऽयःशयने सार्द्धमायस्या योषिता स्वपेत्।
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां वोत्सृजेत्तनुम्॥ २५९

प्राजापत्यं चरेत् कृच्छ्रं समा वा गुरुतल्पगः।
चान्द्रायणं वा त्रीन्मासानभ्यस्यन् वेदसंहिताम्॥ २६०

एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः।
कन्यां समूढहेदेषां सोपवासामकिञ्चनाम्॥ २६१

चान्द्रायणं चरेत् सर्व्वानवकृष्टान्निहत्य तु।
शूद्रोऽधिकारहीनोऽपि कालेनानेन शुध्यति॥ २६२

मिथ्याभिशंसिनो दोषो समोभूतवादिनः।
मिथ्याभिशस्तपापञ्च समादत्ते मृषा वदन्॥ २६३

पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति॥ २६४

कृच्छ्रञ्चैवातिकृच्छ्रञ्च चरेद्वापि समाहितः।
दद्यात्त्रिरात्रं वोपोष्य वृषभैकादशास्तु गाः॥ २६५

उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा।
पयसा वापि मासेन पराकेणाथवा पुनः॥ २६६

ऋषभैकसहस्रा गा दद्यात् क्षत्रवधे पुमान्।
ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत्॥ २६७

वैश्यहाब्दं चरेदेतद्द्याद्वैकशतं गवाम् ।
षण्मासान् शूद्रहा ह्येतद्द्याद्वेनदंश वापि वा ॥ २६८
दुर्वृत्ता ब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु ।
दृतिं धनुर्व्वस्तमविं क्रमाद्द्याद्विशुद्धये ॥ २६९
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ।
अस्थिमतां सहस्रञ्च तथानस्थिमतामनः ॥ २७०
मार्ज्जारगोधानकुल-मण्डूकश्वपतत्रिणः ।
हत्वा त्र्यहं पिवेत् चीरं कृच्छ्रं वा पादिकञ्चरेत् ॥ २७१
गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ।
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः ॥ २७२
हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः ।
भासञ्च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम् ॥ २७३
उरगेष्वायसो दण्डः पण्डके त्रपुसीसकम् ।
कोले घृतघटो देय उष्ट्रे गुञ्जा हयेऽंशुकम् ॥ २७४
तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् ।
दानं दातुञ्चरेत् कृच्छ्रमेकैकस्य विशुद्धये ॥ २७५
फलपुष्पान्नरसजसत्त्वघाते घृताशनम् ।
किञ्चित् सास्थिवधे देयं प्राणायामस्त्वनस्थिके ॥ २७६
वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ।
स्यादोषधिवृथाच्छेदे चीराशी गोऽनुगो दिनम् ॥ २७७
पुंश्चलीवानरखरैर्दष्टश्वोष्ट्रादिवायसैः ।
प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यति ॥ २७८
यन्मेऽद्यरेतइत्याभ्यां स्कन्नं रेतोऽनुमन्त्रयेत् ।
स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत् ॥ २७९

मयि तेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत्।
सावित्रीमशुचौ दृष्टे चापत्ये चानृतेऽपि च॥ २८०
अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम्।
गर्द्दभं पशुमालभ्य नैर्ऋत्यां स विशुध्यति॥ २८१
भैक्षाग्निकार्य्ये त्यक्त्वा तु सप्तरात्रमनातुरः।
कामावकीर्णं इत्याभ्यां जुहुयादाहुतिद्वयम्॥ २८२
उपस्थानं ततः कुर्य्यात् समासिञ्चत्वनेन तु।
मधुमांसाशने कार्य्यः कृच्छ्रः शेषव्रतानि च॥ २८३
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति।
कृच्छ्रत्रयं गुरुः कुर्य्यान्म्रियेत प्रहितो यदि॥ २८४
क्रियमाणोपकारे तु मृते विप्रे न पातकम्।
विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च॥ २८५
महापापोपपापाभ्यां योऽभिशंसेन्मृषापरम्।
अब्भक्षो माससमासीत स जापी नियतेन्द्रियः॥ २८६
अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा।
निर्व्वपेच्च पुरोडाशं वायव्यं पशुमेव व॥ २८७
अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणञ्चरेत्।
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुध्यति॥ २८८
त्रीन् कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि।
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम्॥ २८९
गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः।
गायत्रीजप्यनिरतो मुच्यतेऽसत्प्रतिग्रहात्॥ २९०
प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैवं दिवास्त्रियम्॥ २९१

गुरूं त्वंकृत्य हुंकृत्य विप्रं निर्ज्जित्य वादतः।

बद्‌ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम्॥ २९२

विप्रो दण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने।

कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते॥ २९३

देशं कालं वयः शक्तिं पापञ्चावेक्ष्य यत्नतः।

प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र नोक्ता च निष्कृतिः॥ २९४

दासीकुम्भं वहिर्ग्रामान्निनयेयुः स्वबान्धवाः।

पतितस्य वहिः कुर्य्युः सर्व्वकार्य्येषु चैव तम्॥ २९५

चरितव्रत आयाते निनयेरन् नवं घटम्।

जुगुप्सेरन् न चाप्येनं संवसेयुश्च सर्व्वशः॥ २९६

पतितानामेष एव विधिः स्त्रीणां प्रकीर्त्तितः।

वासो गृहान्तिके देयमन्नं वासः सरक्षणम्॥ २९७

नीचाभिगमनं गर्भ-पातनं भर्त्तृहिंसनम्।

विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्॥ २९८

शरणागतबालस्त्रीहिंसकान् संवसेन्न तु।

चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्॥ २९९

घटेऽपवर्ज्जिते ज्ञातिमध्यस्थो यवसं गवाम्।

प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया॥ ३००

विख्यातदोषः कुर्व्वीत पर्षदोऽनुमतं व्रतम्।

अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत्॥ ३०१

त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम्।

अन्तर्ज्जले विशुध्येत गां दत्त्वा च पयस्विनीम्॥ ३०२

लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः।

जले स्थित्वाभिजुहुयाच्चत्वारिंशद्‌घृताहुतीः॥ ३०३

त्रिरात्रोपोषितो भूत्वा कुष्माण्डीभिर्घृतं शुचिः।
सुरापः स्वर्णहारी तु रुद्रजापी जले स्थितः॥ २०४
सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः।
गौर्देया कर्म्मणोऽस्यान्ते पृथगेभिः पयस्विनी॥ २०५
प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये।
उपपातकजातानामनादिष्टस्य चैव हि॥ २०६
ओङ्काराभिष्टुतं सोमसलिलं पावनं पिवेत्।
कृत्वा तु रेतोविण्मूत्रप्राशनञ्च द्विजोत्तमः॥ २०७
निशायां वा दिवा वापि यदज्ञानकृतं भवेत्।
त्रैकाल्यसन्ध्याकरणात्तत् सर्व्वं विप्रणश्यति॥ २०८
शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः।
सर्व्वपापहरा ह्येते रुद्रैकादशिनी तथा॥ २०९
यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः।
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा॥ २१०
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियारतम्।
न स्पृशन्तीह पापानि महापातकजान्यपि॥ २११
वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाप्सु सूर्य्यदृक्।
जप्त्वा सहस्रं गायत्र्याः शुध्येद्‌ब्रह्मवधादृते॥ २१२
ब्रह्मचर्य्यं दया क्षान्तिर्दानं सत्यमकल्कता।
अहिंसास्तेयमाधुर्य्यदमाश्चेति यमाः स्मृताः॥ २१२
स्नानमौनोपवासेज्या-स्वाध्यायोपस्थनिग्रहाः।
नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादताः॥ २१४
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
जग्ध्वा परेऽहन्युपवसेत् कृच्छ्रं सान्तपनञ्चरेत्॥ २१५

पृथक्सान्तपनद्रव्यैः षड़हः सोपवासकः।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः॥ ३१६
पर्णोदुम्बरराजीव-विल्वपत्रकुशोदकैः।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः॥ ३१७
तप्तचीरघृताम्बुनामेकैकं प्रत्यहं पिवेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः॥ ३१८
एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः॥ ३१९
यथाकथञ्चित्त्रिगुणं प्राजापत्योऽयमुच्यते।
अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः॥ ३२०
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्।
द्वादशाहोपवासेन पराकः परिकीर्त्तितः॥ ३२१
पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम्।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते॥ ३२२
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येष ज्ञेयः पाञ्चदशाहिकः॥ ३२३
तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान्।
एकैकं ह्रासयेत् कृष्टे पिण्डं चान्द्रायणं चरन्॥ ३२४
यथाकथञ्चितं पिण्डानां चत्वारिंशच्छतद्वयम्।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्॥ ३२५
कुर्य्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा।
पवित्राणि जपेत्पिण्डान् गायत्र्या चाभिमन्त्रयेत्॥ ३२६
अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु।
धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम्॥ ३२७

क्रतुक्रतुधर्म्मकामस्तु महतीं श्रियमाप्नुयात्।
यथा गुरुक्रतुफलं प्राप्नोति च समाहितः॥ ३२८

श्रुत्वैतानृषयो धर्म्मान् याज्ञवल्क्येन भाषितान्।
इदमूचुर्म्महात्मानं योगीन्द्रममितौजसम्॥ ३२९

ये इदं धारयिष्यन्ति धर्म्मशास्त्रमतन्द्रिताः।
इहलोके यशः प्राप्य ते यास्यन्ति त्रिपिष्टपम्॥ ३३०

विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनं तथा।
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम्॥ ३३१

श्लोकत्रयमपि ह्यस्माद्यः श्राद्धे श्रावयिष्यति।
पितॄणां तस्य तृप्तिः स्यादक्षया नात्र संशयः॥ ३३२

ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत्।
वैश्यश्चापि धान्यधनवानस्य शास्त्रस्य धारणात्॥ ३३३

य इदं श्रावयेद्विप्रान् द्विजान् सर्व्वेषु पर्व्वसु।
अश्वमेधफलं तस्य तद्भवाननुमन्यताम्॥ ३३४

श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम्।
एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे॥ ३३५

इति श्रीयाज्ञवल्क्यीये धर्म्मशास्त्रे प्रायश्चित्तं
नाम तृतीयोऽध्यायः॥ ३॥

---

# हारीतसंहिता।

## प्रथमोऽध्यायः।

ये वर्णाश्रमधर्म्मस्थास्ते भक्ता केशवं प्रति।
इति पूर्व्वं त्वया प्रोक्तं भूर्भुवःस्वर्द्विजोत्तमाः॥ १
वर्णानामाश्रमाणाञ्च धर्म्मान् नो ब्रूहि सत्तम।
येन सन्तुष्यते देवो नारसिंहः सनातनः॥ २

मार्कण्डेयः॥

अत्राहं कथयिष्यामि पुरावृत्तमनुत्तमम्।
ऋषिभिः सह संवादं हारीतस्य महात्मनः॥ ३

हारीतं सर्व्वधर्म्मज्ञमासीनमिव पावकम्।
प्रणिपत्याब्रुवन् सर्व्वे मुनयो धर्म्मकाङ्क्षिणः॥ ४

भगवन् सर्व्वधर्म्मज्ञ सर्व्वधर्म्मप्रवर्त्तक।
वर्णानामाश्रमाणाञ्च धर्म्मान् नो ब्रूहि भार्गव॥ ५
समासाद्योगशास्त्रञ्च विष्णुभक्तिकरं परम्।
एतच्चान्यच्च भगवन् ब्रूहि नः परमो गुरुः॥ ६
हारीतस्तानुवाचाथ तैरेवं चोदितो मुनिः।
शृण्वन्तु मुनयः सर्व्वे धर्म्मान् वक्ष्यामि शाश्वतान्॥ ७
वर्णानामाश्रमाणाञ्च योगशास्त्रञ्च सत्तमाः।
सन्ध्याय्य मुच्यते मर्त्त्यो जन्मसंसारबन्धनात्॥ ८
पुरा देवो जगत्स्रष्टा परमात्मा जलोपरि।
सुष्वाप भोगिपर्य्यङ्के शयने तु श्रिया सह॥ ९

तस्य सुप्तस्य नाभौ तु महत् पद्ममभूत् किल ।
पद्ममध्येऽभवद् ब्रह्मा वेदवेदाङ्गभूषणः ॥ १०
स चोक्तो देवदेवेन जगत् सृज पुनःपुनः ।
सोऽपि सृष्ट्वा जगत् सर्व्वं सदेवासुरमानुषम् ॥ ११
यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान् मुखतोऽसृजत् ।
असृजत् क्षत्रियान् बाह्वोर्वैश्यानप्यूरुदेशतः ॥ १२
शूद्रांश्च पादयोः सृष्ट्वा तेषाञ्चैवानुपूर्व्वशः ।
यथा प्रोवाच भगवान् ब्रह्मयोनिः पितामहः ॥ १३
तद्वचः सम्प्रवक्ष्यामि शृणुत द्विजसत्तमाः ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं मोक्षफलप्रदम् ॥ १४
ब्राह्मण्यां ब्राह्मणेनैवमुत्पन्नो ब्राह्मणः स्मृतः ।
तस्य धर्म्मं प्रवक्ष्यामि तद्योग्यं देशमेव च ॥ १५
कृष्णसारो मृगो यत्र स्वभावेन प्रवर्त्तते ।
तस्मिन् देशे वसेद्धर्म्मः सिध्यति द्विजसत्तमाः ॥ १६
षट्कर्म्माणि निजान्याहुर्ब्राह्मणस्य महात्मनः ।
तैरेव सततं यस्तु वर्त्तयेत् सुखमेधते ॥ १७
अध्यापनञ्चाध्ययनं याजनं यजनं तथा ।
दानं प्रतिग्रहश्चेति षट्कर्म्माणीति चोच्यते ॥ १८
अध्यापनञ्च त्रिविधं धर्म्मार्थमृक्थकारणात् ।
शुश्रुषाकरणञ्चेति त्रिविधं परिकीर्त्तितम् ॥ १९
एषामन्यतमाभावे वृथाचारो भवेद्द्विजः ।
तत्र विद्या न दातव्या पुरुषेण हितैषिणा ॥ २०
योग्यानध्यापयेच्छिष्यानयोग्यानपि वर्ज्जयेत् ।
विदितात् प्रतिगृह्णीयाद्गृहे धर्म्मप्रसिद्धये ॥ २१

वेदश्चैवाभ्यसेन्नित्यं शुचौ देशे समाहितः ।
धर्म्मशास्त्रं तथा पाठ्यं ब्राह्मणैः शुद्धमानसैः ॥ २२
वेदवत् पठितव्यञ्च श्रोतव्यञ्च दिवा निशि ।
स्मृतिहीनाय विप्राय श्रुतिहीने तथैव च ॥ २३
दानं भोजनमन्यच्च दत्तं कुलविनाशनम् ।
तस्मात् सर्व्वप्रयत्नेन धर्म्मशास्त्रं पठेद्द्विजः ॥ २४
श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्म्मिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्त्तितः ॥ २५
गुरुशुश्रूषणञ्चैव यथान्यायमतन्द्रितः ।
सायं प्रातरुपासीत विवाहाग्निं द्विजोत्तमः ॥ २६
सुस्नातस्तु प्रकुर्व्वीत वैश्वदेवं दिने दिने ।
अतिथीनागतान्छक्त्या पूजयेदविचारतः ॥ २७
अन्यानभ्यागतान् विप्राण्पूजयेच्छक्तितो गृही ।
स्वदारनिरतो नित्यं परदारविवर्ज्जितः ॥ २८
कृतहोमस्तु भुञ्जीत सायं प्रातरुदारधीः ।
सत्यवादी जितक्रोधी नाधर्म्मे वर्त्तयेन्मतिम् ॥ २९
स्वकर्म्मणि च सम्प्राप्ते प्रमादान्न निवर्त्तते ।
सत्यां हित्यां वदेद्वाचं परलोकहितैषणीम् ॥ ३०
एष धर्म्मः समुद्दिष्टो ब्राह्मणस्य समासतः ।
धर्म्ममेव हि यः कुर्य्यात् स याति ब्रह्मणः पदम् ॥ ३१
इत्येष धर्म्मः कथित मयायं पृष्टो भवद्भिस्त्वखिलाघहारी ।
वदामि राज्ञामपि चैव धर्म्मान् पृथक् पृथग्बोधत

विप्रवर्य्याः ॥ ३२

इति हारीते धर्म्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः ।

क्षत्रादीनां प्रवक्ष्यामि यथावदनुपूर्व्वशः ।
येषु प्रवृत्ता विधिना सर्व्वे यान्ति परां गतिम् ॥ १
राज्यस्थः क्षत्रियश्चापि प्रजा धर्म्मेण पालयन् ।
कुर्य्यादध्ययनं सम्यग्यजेद्यज्ञान् यथाविधि ॥ २
दद्याद्दानं द्विजातिभ्यो धर्म्मबुद्धिसमन्वितः ।
स्वभार्य्यानिरतो नित्यं षड्‌भागार्हः सदा नृपः ॥ ३
नीतिशास्त्रार्थकुशलः सन्धिविग्रहतत्त्ववित् ।
देवब्राह्मणभक्तश्च पितृकार्य्यपरस्तथा ॥ ४
धर्म्मेण यजनं कार्य्यमधर्म्मपरिवर्ज्जनम् ।
उत्तमां गतिमाप्नोति क्षत्रियोऽप्येवमाचरन् ॥ ५
गोरक्षां कृषिवाणिज्यं कुर्य्याद्वैश्यो यथाविधि ।
दानं देयं यथाशक्त्या ब्राह्मणानाञ्च भोजनम् ॥ ६
दम्भमोहविनिर्मुक्तस्तथा वागनसूयकः ।
स्वदारनिरतो दान्तः परदारविवर्ज्जितः ॥ ७
धनैर्विप्रान् भोजयित्वा यज्ञकाले तु याजकान् ।
अप्रभुत्वञ्च वर्त्तेत धर्म्मेभ्यादेहपातनात् ॥ ८
यज्ञाध्ययनदानानि कुर्य्यान्नित्यमतन्द्रितः ।
पितृकार्य्यपरश्चैव नरसिंहार्च्चनापरः ॥ ९
एतद्वैश्यस्य धर्म्मोऽयं स्वधर्म्ममनुतिष्ठति ।
एतदाचरते यो हि स स्वर्गी नात्र संशयः ॥ १०
वर्णत्रयस्य शुश्रूषां कुर्य्याच्छूद्रः प्रयत्नतः ।
दासवद्ब्राह्मणानाञ्च विशेषेण समाचरेत् ॥ ११

अयाचितप्रदाता च कष्टं वृत्त्यर्थमाचरेत्।
पाकयज्ञविधानेन यजेद्देवमतन्द्रितः॥ १२
शूद्राणामधिकं कुर्य्यादर्च्चनं न्यायवर्त्तिनाम्।
धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टभोजनम्।
स्वदारेषु रतिश्चैव परदारविवर्ज्जनम्॥ १३
इत्थं कुर्य्यात् सदा शूद्रो मनोवाक्कायकर्म्मभिः।
स्थानमैन्द्रमवाप्नोति नष्टपापः सुपुण्यकृत्॥ १४

वर्णेषु धर्म्मा विविधा मयोक्ता
यथा तथा ब्रह्ममुखेरिताः पुरा।
शृणुध्वमत्राश्रमधर्म्ममाद्यं
मयोच्यमानं क्रमशो मुनीन्द्राः॥ १५

इति हारीते धर्म्मशास्त्रे द्वितीयोऽध्यायः॥ २॥

---

## तृतीयोऽध्यायः।

उपनीतो माणवको वसेद्गुरुकुलेषु च।
गुरोः कुले प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा॥ १
ब्रह्मचर्य्यमधःशय्या तथा वह्नेरुपासना।
उदकुम्भान् गुरोर्दद्याद्गोग्रासञ्चेन्धनानि च॥ २
कुर्य्यादध्ययनञ्चैव ब्रह्मचारी यथाविधि।
विधिं त्यक्त्वा प्रकुर्व्वाणो न स्वाध्यायफलं लभेत्॥ ३
यः कश्चित् कुरुते धर्म्मं विधिं हित्वा दुरात्मवान्।
न तत्फलमवाप्नोति कुर्व्वाणोऽपि विधिच्युतः॥ ४

तस्माद्वेदव्रतानीह चरेत् स्वाध्यायसिद्धये ।
शौचाचारमशेषन्तु शिक्षयेद्गुरुसन्निधौ ॥ ५

अजिनं दण्डकाष्ठञ्च मेखलाञ्चोपवीतकम् ।
धारयेदप्रमत्तश्च ब्रह्मचारी समाहितः ॥ ६

सायं प्रातश्चरेद्भैक्ष्यं भोज्यार्थं संयतेन्द्रियः ।
आचम्य प्रयतो नित्यं न कुर्य्याद्दन्तधावनम् ॥ ७

छत्रञ्चोपानहञ्चैव गन्धमाल्यादि वर्ज्जयेत् ।
नृत्यगीतमथालापं मैथुनञ्च विवर्ज्जयेत् ॥ ८

हस्त्यश्वारोहणञ्चैव सन्त्यजेत् संयतेन्द्रियः ।
सन्ध्योपास्तिं प्रकुर्व्वीत ब्रह्मचारी व्रतस्थितः ॥ ९

अभिवाद्य गुरोः पादौ सन्ध्याकर्म्मावसानतः ।
तथा योगं प्रकुर्व्वीत मातापित्रोश्च भक्तितः ॥ १०

एतेषु त्रिषु नष्टेषु नष्टाः स्युः सर्व्वदेवताः ।
एतेषां शासने तिष्ठेद्ब्रह्मचारी विमत्सरः ॥ ११

अधीत्य च गुरोर्व्वेदान् वेदौ वा वेदमेव वा ।
गुरवे दक्षिणां दद्यात् संयमो ग्राममावसेत् ॥ १२

यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः ।
सन्न्याससमयं कृत्वा ब्राह्मणो ब्रह्मचर्य्यया ॥ १३

तस्मिन्नेव नयेत् कालमाचार्य्ये यावदायुषम् ।
तदभावे च तत्पुत्रे तच्छिष्ये वाथवा कुले ॥
न विवाहो न सन्न्यासो नैष्ठिकस्य विधीयते ॥ १४

इमं यो विधिमास्थाय त्यजेद्देहमतन्द्रितः ।
नेह भूयोऽपि जायेत ब्रह्मचारी दृढ़व्रतः ॥ १५

यो ब्रह्मचारी विधिना समाहित
श्चरेत् पृथिव्यां गुरुसेवने रतः।
सम्प्राप्य विद्यामतिदुर्लभां शिवां
फलञ्च तस्याः सुलभन्तु विन्दति॥ १६

इति हारीते धर्म्मशास्त्रे तृतीयोऽध्यायः॥ ३॥

---

## चतुर्थोऽध्यायः।

गृहीतवेदाध्ययनः श्रुतशास्त्रार्थतत्त्ववित्।
असमानार्षगोत्रां हि कन्यां सभ्रातृकां शुभाम्॥ १
सर्व्वावयवसम्पूर्णां सुवृत्तामुद्वहेन्नरः।
ब्राह्मेण विधिना कुर्य्यात् प्रशस्तेन द्विजोत्तमः॥ २
तथान्ये बहवः प्रोक्ता विवाहा वर्णधर्म्मतः।
औपासनञ्च विधिवदाहृत्य द्विजपुङ्गवाः॥ ३
सायं प्रातश्च जुहुयात् सर्व्वकालमतन्द्रितः।
स्नानं कार्य्यं ततो नित्यं दन्तधावनपूर्व्वकम्॥ ४
उषःकाले समुत्थाय कृतशौचो यथाविधि।
मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः॥ ५
तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तकाष्ठकम्।
करञ्जं खादिरं वापि कदम्बं कुरवं तथा॥ ६
सप्तपर्णपृश्निपर्णीजम्बुनिम्बं तथैव च।
अपामार्गञ्च विल्वञ्चार्कञ्चोडुम्बरमेव च॥ ७
एते प्रशस्ताः कथिता दन्तधावनकर्म्मणि।
दन्तकाष्ठस्य भक्षश्च समासेन प्रकीर्त्तितः॥ ८

सर्व्वे कण्टकिनः पुण्याः चीरिणश्च यशस्विनः ।
अष्टाङ्गुलेन मानेन दण्डकाष्ठमिहोच्यते ।
प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत् ॥ ९
प्रतिपत्पर्व्वषष्ठीषु नवम्याञ्चैव सत्तमाः ।
दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥ १०
अभावे दन्तकाष्ठानां प्रतिषिद्धदिनेषु च ।
अपां द्वादशगण्डुषैर्मुखशुद्धिं समाचरेत् ॥ ११
स्नात्वा मन्त्रवदाचम्य पुनराचमनं चरेत् ।
मन्त्रवत् प्रोक्ष्य चात्मानं प्रक्षिपेदुदकाञ्जलिम् ॥ १२
आदित्येन सह प्रातर्म्मन्देहा नाम राक्षसाः ।
युध्यति वरदानेन ब्रह्मणोऽव्यक्तजन्मनः ॥ १३
उदकाञ्जलिनिक्षेपा गायत्र्या चाभिमन्त्रिताः ।
निघ्नन्ति राक्षसान् सर्व्वान् मन्देहाख्यान् द्विजेरिताः ॥ १४
ततः प्रयाति सविता ब्राह्मणैरभिरक्षितः ।
मरीच्याद्यैर्म्महाभागैः सनकाद्यैश्च योगिभिः ॥ १५
तस्मान्न लङ्घयेत् सन्ध्यां सायं प्रातः समाहितः ।
उल्लङ्घयति यो मोहात् स याति नरकं ध्रुवम् ॥ १६
सायं मन्त्रवदाचम्य प्रोक्ष्य सूर्य्यस्य चाञ्जलिम् ।
दत्त्वा प्रदक्षिणं कुर्य्याज्जलं स्पृष्ट्वा विशुध्यति ॥ १७
पूर्व्वां सन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनात् ॥ १८
उपास्य पश्चिमां सन्ध्यां सादित्याञ्च यथाविधि ।
गायत्रीमभ्यसेत्तावद्यावत्तारां न पश्यति ॥ १९
ततश्चावसथं प्राप्य कृत्वा होमं स्वयं बुधः ।

सञ्चिन्त्य पोष्यवर्गस्य भरणार्थं विचक्षण:॥ २०
तत: शिष्यहितार्थाय स्वाध्यायं किञ्चिदाचरेत्।
ईश्वरञ्चैव कार्य्यार्थमभिगच्छेद्विजोत्तम:॥ २१
कुशपुष्पेन्धनादीनि गत्वा दूरं समाहरेत्।
ततो माध्याह्निकं कुर्य्याच्छुचौ देशे मनोरमे॥ २२
विधिं तस्य प्रवक्ष्यामि समासात् पापनाशनम्।
स्नात्वा येन विधानेन मुच्यते सर्व्वकिल्विषात्॥ २३
स्नानार्थं मृदमानीय शुद्धाक्षततिलै: सह।
सुमनाश्च ततो गच्छेन्नदीं शुद्धजलाधिकाम्॥ २४
नद्यान्तु विद्यमानायां न स्नायादन्यवारिणि।
न स्नायादल्पतोयेषु विद्यमाने बहूदके॥ २५
सरिद्वरं नदीस्नानं प्रतिस्रोत:स्थितश्चरेत्।
तड़ागादिषु तोयेषु स्नायाच्च तदभावत:॥ २६
शुचिदेशं समभ्युक्ष्य स्थापयेत् सकलाम्बरम्।
मृत्तोयेन स्वकं देहं लिम्पेत् प्रक्षाल्य यत्नत:॥ २७
स्नानादिकञ्च सम्प्राप्य कुर्य्यादाचमनं बुध:।
सोऽन्तर्ज्जलं प्रविश्याथ वाग्यतो नियमेन हि।
हरिं संस्मृत्य मनसा मज्जयेच्चूरुमज्जले॥ २८
ततस्तीरं समासाद्य आचम्याप: समन्त्रत:।
प्रोक्षयेद्वारुणैर्म्मन्त्रै: पावमानीभिरेव च॥ २९
कुशाग्रकृततोयेन प्रोक्ष्यात्मानं प्रयत्नत:।
स्योनापृथिवीति मृद्गात्रे इदंविष्णुरिति द्विजा:॥ ३०
ततो नारायणं देवं संस्मरेत् प्रतिमज्जनम्।
निमज्जयान्तर्ज्जले सम्यक् क्रियते चाघमर्षणम्॥ ३१

स्नात्वाक्षततिलैस्तद्वद्देवर्षिपितृभिः सह।
तर्पयित्वा जलं तस्मान्निष्पीड्य च समाहितः॥ ३२
जलतीरं समासाद्य तत्र शुक्ले च वाससी।
परिधायोत्तरीयञ्च कुर्य्यात् केशान्न धूनयेत्॥ ३३
न रक्तमुल्वणं वासो न नीलाञ्च प्रशस्यते।
मलाक्तं गन्धहीनञ्च वर्ज्जयेदम्बरं बुधः॥ ३४
ततः प्रक्षालयेत् पादौ मृत्तोयेन विचक्षणः।
दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत् पुनः॥ ३५
त्रिः पिवेदीक्षितं तोयमास्यं द्विः परिमार्ज्जयेत्।
पादौ शिरस्ततोऽभ्युक्ष्य त्रिभिरास्यमुपस्पृशेत्॥ ३६
अङ्गुष्ठानामिकाभ्याञ्च चक्षुषी समुपस्पृशेत्।
तथैव पञ्चभिर्मूर्द्धि स्पृशेदेवं समाहितः॥ ३७
अनेन विधिनाचम्य ब्राह्मणः शुद्धमानसः।
कुर्व्वीत दर्भपाणिस्तूदङ्मुखः प्राङ्मुखोऽपि वा॥ ३८
प्राणायामत्रयं धीमान् यथान्यायमतन्द्रितः।
जपयज्ञं ततः कुर्य्याद्गायत्रीं वेदमातरम्॥ ३९
त्रिविधो जपयज्ञः स्यात्तस्य तत्त्वं निबोधत।
वाचिकश्च उपांशुश्च मानसश्च त्रिधाकृतिः॥ ४०
त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः॥ ४१
यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः।
मन्त्रमुच्चारयन् वाचा जपयज्ञस्तु वाचिकः॥ ४२
शनैरुच्चारयन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत्।
किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः॥ ४३

धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् ।
शब्दार्थचिन्तनाभ्यान्तु तदुक्तं मानसं स्मृतम् ॥ ४४
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ने विपुलान भोगान् प्राप्नुवन्ति मनीषिणः ॥ ४५
राक्षसाश्च पिशाचाश्च महासर्पाश्च भीषणाः ।
जपितान्नोपसर्पन्ति दूरादेव प्रयान्ति ते ॥ ४६
छन्द ऋष्यादि विज्ञाय जपेन्मन्त्रमतन्द्रितः ।
जपेदहरहर्ज्ञात्वा गायत्रीं मनसा द्विजः ॥ ४७
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं यो जपेन्नित्यं स न पापेन लिप्यते ॥ ४८
अथ पुष्पाञ्जलिं कृत्वा भानवे चोर्द्धबाहुकः ।
उदुत्यञ्च जपेत् सूक्तं तच्चक्षुरिति चापरम् ॥ ४९
प्रदक्षिणमुपावृत्य नमस्कुर्य्याद्दिवाकरम् ।
ततस्तीर्थेन देवादीनद्भिः सन्तर्पयेद्द्विजः ॥ ५०
स्नानवस्त्रन्तु निष्पीड्य पुनराचमनं चरेत् ।
तद्वद्बन्धुजनस्येह स्नानं दानं प्रकीर्त्तितम् ॥ ५१
दर्भासीनो दर्भपाणि र्ब्रह्मयज्ञविधानतः ।
प्राङ्मुखो ब्रह्मयज्ञन्तु कुर्य्याच्छ्रद्धासमन्वितः ॥ ५२
ततोऽर्घं भानवे दद्यात्तिलपुष्पाक्षतान्वितम् ।
उत्थाय मूर्द्धपर्य्यन्तं हंसः शुचिषदित्यृचा ॥ ५३
ततो देवं नमस्कृत्य गृहं गच्छेत्ततः पुनः ।
विधिना पुरुषसूक्तस्य गत्वा विष्णुं समर्च्चयेत् ॥ ५४
वैश्वदेवं ततः कुर्य्याद्बलिकर्म्म विधानतः ।
गोदोहमात्रमाकाङ्क्षे दतिथिं प्रति वै गृही ॥ ५५

अदृष्टपूर्व्वमज्ञातमतिथिं प्राप्तमर्च्चयेत् ।
स्वागतासनदानेन प्रत्युत्थानेन चाम्बुना ॥ ५६
स्वागतेनाग्नयस्तुष्टा भवन्ति गृहमेधिन: ।
आसनेन तु दत्तेन प्रीतो भवति देवराट् ॥ ५७
पादशौचेन पितर: प्रीतिमायान्ति दुर्लभाम् ।
अन्नदानेन युक्तेन तृप्यते हि प्रजापति: ॥ ५८
तस्मादतिथये कार्य्यं पूजनं गृहमेधिना ।
भक्त्या च शक्तितो नित्यं विष्णोरर्च्चादनन्तरम् ॥ ५९
भिक्षाञ्च भिक्षवे दद्यात् परिव्राड़्ब्रह्मचारिणे ।
अकल्पितान्नमुद्धृत्य सव्यञ्जनसमन्वितम् ॥ ६०
अकृते वैश्वदेवेऽपि भिक्षौ च गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्ज्जयेत् ॥ ६१
वैश्वदेवकृतान् दोषाञ्छक्तो भिक्षुर्व्यपोहितुम् ।
न हि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति ॥ ६२
तस्मात् प्राप्ताय यतये भिक्षां दद्यात् समाहित: ।
विष्णुरेव यतिच्छाय इति निश्चित्य भावयेत् ॥ ६३
सुवासिनीं कुमारीञ्च भोजयित्वा नरानपि ।
बालवृद्धांस्तत: शेषं स्वयं भुञ्जीत वा गृही ॥ ६४
प्राङ्मुखोदङ्मुखो वापि मौनी च मितभाषक: ।
अन्नमादौ नमस्कृत्य प्रहृष्टेनान्तरात्मना ॥ ६५
एवं प्राणाहुतिं कुर्य्यान्मन्त्रेण च पृथक् पृथक् ।
तत: स्वादुकरान्नञ्च भुञ्जीत सुसमाहित: ॥ ६६
आचम्य देवतामिष्टां संस्मरन्नुदरं स्पृशेत् ।
इतिहासपुराणाभ्यां कञ्चित् कालं नयेद्बुध: ॥ ६७

ततः सन्ध्यामुपासीत वह्निर्गत्वा विधानतः ।
कृतहोमस्तु भुञ्जीत रात्रौ चातिथिभोजनम् ॥ ६८
सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्य्यादग्निहोत्रसमो विधिः ॥ ६९
शिष्यानध्यापयेच्चापि अनध्याये विसर्ज्जयेत् ।
स्मृत्युक्तानखिलांश्चापि पुराणोक्तानपि द्विजः ॥ ७०
महानवम्यां द्वादश्यां भरण्यामपि पर्व्वसु ।
तथाक्षयतृतीयायां शिष्यान् नाध्यापयेद्द्विजः ॥ ७१
माघमासे तु सप्तम्यां रथ्याख्यायान्तु वर्ज्जयेत् ।
अध्यापनं समभ्यञ्जन् स्नानकाले च वर्ज्जयेत् ॥ ७२
नीयमानं शवं दृष्ट्वा महीस्थं वा द्विजोत्तमाः ।
न पठेद्रुदितं श्रुत्वा सन्ध्यायान्तु द्विजोत्तमाः ॥ ७३
दानानि च प्रदेयानि गृहस्थेन द्विजोत्तमाः ।
हिरण्यदानं गोदानं पृथिवीदानमेव च ॥ ७४
एवं धर्म्मो गृहस्थस्य सारभूत उदाहृतः ।
य एवं श्रद्धया कुर्य्यात् स याति ब्रह्मणः पदम् ॥ ७५
ज्ञानोत्कर्षश्च तस्य स्यान्नारसिंहप्रसादतः ।
तस्मान्मुक्तिमवाप्नोति ब्राह्मणो द्विजसत्तमाः ॥ ७६

एवं हि विप्राः कथितो मया वः
समासतः शाश्वतधर्म्मराशिः ।
गृही गृहस्थस्य सतो हि धर्म्मं
कुर्व्वन् प्रयत्नाद्धरिमेति युक्तम् ॥ ७७

इति हारीते धर्म्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अतः परं प्रवक्ष्यामि वानप्रस्थस्य सत्तमाः ।
धर्म्माश्रमं महाभागाः कथ्यमानं निबोधत ॥ १
गृहस्थः पुत्रपौत्रादीन् दृष्ट्वा पलितमात्मनः ।
भार्य्यां पुत्रेषु निक्षिप्य सह वा प्रविशेद्वनम् ॥ २
नखरोमाणि च तथा सितगात्रत्वगादि च ।
धारयन् जुहुयादग्निं वनस्थो विधिमाश्रितः ॥ ३
धान्यैश्च वनसम्भूतैर्नीवाराद्यैरनिन्दितैः ।
शाकमूलफलैर्व्वापि कुर्य्यान्नित्यं प्रयत्नतः ॥ ४
त्रिकालस्नानयुक्तस्तु कुर्य्यात्तीव्रं तपस्तदा ।
पक्षान्ते वा समश्नीयान्मासान्ते वा स्वपक्कभुक् ॥ ५
यथा चतुर्थकाले तु भुञ्जीयादष्टमेऽथवा ।
षष्ठे च कालेऽप्यथवा वायुभक्षोऽथवा भवेत् ॥ ६
घर्म्मे पञ्चाग्निमध्यस्थस्तथा वर्षे निराश्रयः ।
हेमन्ते च जले स्थित्वा नयेत् कालं तपश्चरन् ॥ ७
एवञ्च कुर्व्वता येन कृतबुद्धिर्यथाक्रमम् ।
अग्निं स्वात्मनि कृत्वा तु प्रव्रजेदुत्तरां दिशम् ॥ ८
आदेहपातं वनगो मौनमास्थाय तापसः ।
स्मरन्नतीन्द्रियं ब्रह्म ब्रह्मलोके महीयते ॥ ९
तपो हि यः सेवति वन्यवासः समाधियुक्तः प्रयतान्तरात्मा ।
विमुक्तपापो विमलः प्रशान्तः स याति दिव्यं पुरुषं पुराणम् ॥ १०

इति हारीते धर्म्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः।

अतःपरं प्रवक्ष्यामि चतुर्थाश्रममुत्तमम्।
श्रद्धया तदनुष्ठाय तिष्ठन् मुच्येत बन्धनात्॥ १
एवं वनाश्रमे तिष्ठन् पातयंश्चैव किल्बिषम्।
चतुर्थमाश्रमं गच्छेत् सन्न्यासविधिना द्विजः॥ २
दत्त्वा पितृभ्यो देवेभ्यो मानुषेभ्यश्च यत्नतः।
दत्त्वा श्राद्धं पितृभ्यश्च मानुषेभ्यस्तथात्मनः॥ ३
इष्टिं वैश्वानरीं कृत्वा प्राङ्मुखोदङ्मुखोऽपि वा।
अग्निं स्वात्मनि संरोप्य मन्त्रवित् प्रव्रजेत् पुनः॥ ४
ततः प्रभृति पुत्रादौ स्नेहालापादि वर्ज्जयेत्।
बन्धुनामभयं दद्यात् सर्व्वभूताभयं तथा॥ ५
त्रिदण्डं वैणवं सम्यक् सन्ततं समपर्व्वकम्।
वेष्टितं कृष्णगोवालरज्जुमच्चतुरङ्गुलम्॥ ६
शौचार्थं मानसार्थञ्च मुनिभिः समुदाहृतम्।
कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम्॥ ७
पादुके चापि गृह्णीयात् कुर्य्यान्नान्यस्य संग्रहम्।
एतानि तस्य लिङ्गानि यतेः प्रोक्तानि सर्व्वदा॥ ८
संगृह्य कृतसन्न्यासो गत्वा तीर्थमनुत्तमम्।
स्नात्वाचम्य च विधिवद्वस्त्रपूतेन वारिणा॥ ९
तर्पयित्वा तु देवांश्च मन्त्रवद्भास्करं नमेत्।
आत्मनः प्राङ्मुखो मौनी प्राणायामत्रयं चरेत्॥ १०
गायत्रीञ्च यथाशक्ति जप्त्वा ध्यायेत् परं पदम्।
स्थित्यर्थमात्मनो नित्यं भिक्षाटनमथाचरेत्॥ ११

सायंकाले तु विप्राणां गृहाण्यभ्यवपद्य तु ।
सम्यग् याचेच्च कवलं दक्षिणेन करेण वै ॥ १२
पात्रं वामकरे स्थाप्य दक्षिणेन तु शोधयेत् ।
यावतान्नेन तृप्तिः स्यात्तावद्भैक्षं समाचरेत् ॥ १३
ततो निवृत्य तत्पात्रं संस्थाप्यान्यत्र संयमी ।
चतुर्भिरङ्गुलैश्छाद्य ग्रासमात्रं समाहितः ॥ १४
सर्व्वव्यञ्जनसंयुक्तं पृथक्पात्रे नियोजयेत् ।
सूर्य्यादिभूतदेवेभ्यो दत्त्वा सम्प्रोक्ष्य वारिणा ॥ १५
भुञ्जीत पात्रपुटके पात्रे वाग्यतो यतिः ।
वटकाश्वत्थपर्णेषु कुम्भीतैन्दुकपात्रके ॥ १६
कोविदारकदम्बेषु न भुञ्जीयात् कदाचन ।
मलाक्ताः सर्व्वं उच्यन्ते यतयः कांस्यभोजिनः ॥ १७
कांस्यभाण्डेषु यत् पाको गृहस्थस्य तथैव च ।
कांस्ये भोजयतः सर्व्वं किल्बिषं प्राप्नुयात्तयोः ॥ १८
भुक्त्वा पात्रे यतिर्नित्यं क्षालयेन्मन्त्रपुर्व्वकम् ।
न दुष्यते च तत्पात्रं यज्ञेषु चमसा इव ॥ १९
अथाचम्य निदिध्यास्य उपतिष्ठेत भास्करम् ।
जपध्यानेतिहासैश्च दिनशेषं नयेद्बुधः ॥ २०
कृतसन्ध्यस्ततो रात्रिं नयेद्देवगृहादिषु ।
हृत्पुण्डरीकनिलये ध्यायेदात्मानमव्ययम् ॥ २१
यदि धर्म्मरतिः शान्तः सर्व्वभूतसमो वशी ।
प्राप्नोति परमं स्थानं यत् प्राप्य न निवर्त्तते ॥ २२
त्रिदण्डभृद्यो हि पृथक् समाचरेच्छनैःशनैर्यस्तु
बहिर्म्मुखाक्षः ।

सम्मुच्य संसारसमस्तवन्धनात् स याति विष्णोरमृतात्मनः
पदम् ॥ २२

इति हारीते धर्म्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

वर्णनामाश्रमाणाञ्च कथितं धर्म्मलक्षणम्।
येन स्वर्गापवर्गञ्च प्राप्नुवन्ति द्विजातयः ॥ १
योगशास्त्रं प्रवक्ष्यामि सङ्क्षेपात् सारमुत्तमम्।
यस्य च श्रवणाद्यान्ति मोक्षञ्चैव मुमुक्षवः ॥ २
योगाभ्यासवलेनैव नश्येयुः पातकानि तु।
तस्माद्योगपरो भूत्वा ध्यायेन्नित्यं क्रियापरः ॥ ३
प्राणायामेन वचनं प्रत्याहारेण चेन्द्रियम्।
धारणाभिर्व्वशे कृत्वा पूर्व्वं दुर्द्धर्षणं मनः ॥ ४
एकाकारमनानन्दं बुधरूपमनामयम्।
सूक्ष्मात् सूक्ष्मतरं ध्यायेज्जगदाधारमुच्यते ॥ ५
आत्मानं वहिरन्तःस्थं शुद्धचामीकरप्रभम्।
रहस्येकान्तमासीनो ध्यायेदामरणान्तिकम् ॥ ६
यत् सर्व्वप्राणिहृदयं सर्व्वेषाञ्च हृदिस्थितम्।
यच्च सर्व्वजनैर्ज्ञेयं सोऽहमस्मीति चिन्तयेत् ॥ ७
आत्मलाभसुखं यावत्तपोध्यानमुदीरितम्।
श्रुतिस्मृत्यादिकं धर्म्मं तद्विरुद्धं न चाचरेत् ॥ ८

यथा रथोऽश्वहीनस्तु यथाश्वो रथिहीनकः ।
एवं तपश्च विद्या च संयुतं भेषजं भवेत् ॥ ९
यथान्नं मधुसंयुक्तं मधुरान्नेन संयुतम् ।
उभाभ्यामपि पक्षाभ्यां यथा खे पक्षिणां गतिः ॥ १०
तथैव ज्ञानकर्म्मभ्यां प्राप्यते ब्रह्मशाश्वतम् ।
विद्यातपोभ्यां सम्पन्नो ब्राह्मणो योगतत्परः ॥ ११
देहद्वयं विहायाशु मुक्तो भवति बन्धनात् ।
न तथा क्षीणदेहस्य विनाशो विद्यते क्वचित् ॥ १२
मया ते कथितः सर्व्वो वर्णाश्रमविभागशः ।
सङ्क्षेपेण द्विजश्रेष्ठा धर्म्मस्तेषां सनातनः ॥ १३
श्रुत्वैवं मुनयो धर्म्मं स्वर्गमोक्षफलप्रदम् ।
प्रणम्य तमृषिं जग्मुर्मुदिताः स्वं स्वमाश्रमम् ॥ १४

मार्कण्डेयः ।

धर्म्मशास्त्रमिदं सर्व्वं हारीतमुखनिःसृतम् ।
अधीत्य कुरुते धर्म्मं स याति परमां गतिम् ॥ १५
ब्राह्मणस्य तु यत् कर्म्म कथितं बाहुजस्य च ।
ऊरुजस्यापि यत् कर्म्म कथितं पादजस्य च ॥ १६
अन्यथा वर्त्तमानस्तु सद्यः पतति जातितः ।
यो यस्याभिहितो धर्म्मः स तु तस्य तथैव च ।
तस्मात् स्वधर्म्मं कुर्व्वीत द्विजो नित्यमनापदि ॥ १७
वर्णाश्चत्वारो राजेन्द्र चत्वारश्चापि चाश्रमाः ।
स्वधर्म्मं ये तु तिष्ठन्ति ते यान्ति परमां गतिम् ॥ १८
स्वधर्म्मेण यथा नृणां नारसिंहः प्रसीदति ।
न तुष्यति तथान्येन कर्म्मणा मधुसूदनः ॥ १९

अतः कुर्व्वन् निजं कर्म्म यथाकालमतन्द्रितः।
सहस्रानीकदेवेशं नारसिंहञ्च सात्वयम्॥ २०
उत्पन्नवैराग्यबलेन योगी
ध्यायेत् परं ब्रह्म सदाक्रियावान्।
सत्यं सुखं रूपमनन्तमाद्यं
विहाय देहं पदमेति विष्णोः॥ २१
इति हारीते धर्म्मशास्त्रे सप्तमोऽध्यायः॥ ७

# उशनःसंहिता।

## प्रथमोऽध्यायः।

शौनकाद्याश्च मुनयः औशनं भार्गवं मुनिम्।
नत्वा पप्रच्छुरखिलं धर्म्मशास्त्रविनिर्णयम्॥ १
ऋषीणां शृखतां पूर्व्वमुशना धर्म्मतत्त्ववित्।
धर्म्मार्थकाममोक्षाणां कारणं पापनाशनम्॥ २
सुसमाधिहृदो यूयं शृणुध्वं गदतो मम।
भार्गवं पितरं नत्वा उशनं धर्म्ममब्रवीत्॥ ३
कृतोपनयनो वेदानधीयत द्विजोत्तमः।
गर्भाष्टमे वाष्टमे वा स्वसूत्रोक्तविधानतः॥ ४
दण्डे च मेखलासूत्रे कृष्णाजिनधरो मुनिः।
भिक्षाहारो गुरुहितवीक्षमाणो गुरोर्म्मुखम्॥ ५
कार्पासमुपवीतं सन्निर्म्मितं ब्रह्मणा पुरा।
ब्राह्मणानां त्रिवृत् सूत्रं शोणमाविकमेव वा॥ ६
सदोपवीती चैव स्यात् सदा बद्धशिखो द्विजः।
अन्यथा यत्कृतं वासः कार्पासं वा कषायकम्।
तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम्॥ ७
उत्तरीयं समाख्यातं वासःकृष्णाजिनं शुभम्।
अभावे भव्यमजिनं रौरवं वा विधीयते॥ ८
उपवीतं वामबाहुसव्यबाहुसमन्वितम्।
उपवीती भवेन्नित्यं निवीतं कण्ठलम्बनम्॥ ९
सव्यबाहुं समुद्धृत्य दक्षिणेन धृतां द्विजाः।
प्राचीनावीतमित्युक्तं पित्र्ये कर्म्मणि धारयेत्॥ १०

अग्न्यगारे गवांगोष्ठे होमे जप्ये तथैव च ।
स्वाध्यायभोजने नित्यं ब्राह्मणानाञ्च सन्निधौ ॥ ११
उपासने गुरूणाञ्च सन्ध्ययोरुभयोरपि ।
उपवीतो भवेन्नित्यं विधिरेष सनातनः ॥ १२
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
मुञ्जाभावे कुशानाहुर्ग्रन्थिनैकेन वा त्रिभिः ॥ १३
धारयेद्बिल्वपालाशं दण्डं केशान्तगं द्विजः ।
यज्ञार्हवृक्षजं वाथ सौम्यं व्रणमेवच ॥ १४
सायं प्रातर्द्विजः सन्ध्यामुपासीत समाहितः ।
कामाल्लोभाद्भयान्मोहात्कदा न पतितो भवेत् ॥ १५
अग्निकार्य्यं ततः कुर्य्यात् सायं प्रातः प्रसन्नधीः ।
स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥ १६
देवाभ्यर्च्चां ततः कुर्य्यात् पुष्पैः पत्रेण चाम्बुभिः ।
अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्म्मतः ॥ १७
असावहम्भो नामेति सम्यक् प्रणतिपूर्व्वकम् ।
आयुरारोग्यवान् वित्तं द्रव्याद्यपरिवर्ज्जितः ॥ १८
आयुष्मान् भव सौम्येति वाच्यो विप्राभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाचरस्ततः ॥ १९
यो न वेत्त्यभिवादस्य द्विजः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ २०
सव्येन पाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणम् ॥ २१
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तत्पूर्व्वमभिवादयेत् ॥ २२

नोदकं धारयेद्भैक्षं पुष्पाणि समिधस्तथा ।
एवं विधानि चान्यानि न देवार्थेषु किञ्चन ॥ २३

ब्राह्मणं कुशलं पृच्छेत् क्षत्रियाञ्चाप्यनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ २४

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलश्वशुरस्त्रातृमातामहपितामहौ ।
वर्णकाश्च पितृव्यश्च सम्प्रैते पितरः स्मृताः ॥ २५

माता मातामही गुर्व्वी पितृमातृष्वसादयः ।
श्वश्रूः पितामही ज्येष्ठा ज्ञातव्या गुरवः स्त्रियः ॥ २६

इत्युक्ता गुरवः सर्व्वे मातृतः पितृतस्तथा ।
अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः ॥ २७

गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ।
न तैरुपविशेत् सार्द्धं विवदेन्नार्थकारणात् ॥ २८

जीवितार्थमपि द्वेषं गुरुभिर्नैव भाषणम् ।
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥ २९

गुरूणामपि सर्व्वेषां पूज्याः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥ ३०

यो हि वासयति दिवा येन सद्योपदिश्यते ।
ज्येष्ठो भ्राता च भर्त्ता च पञ्च ते गुरवस्तथा ॥ ३१

आत्मनः सर्व्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजनीयाः प्रयत्नेन पञ्चैते भूतिमिच्छता ॥ ३२

यावत् पिता च माता च द्वावेतौ निर्व्विकारणम् ।
तावत्सर्व्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥ ३३

पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि।
स पुत्रः सकलं कर्म्म प्राप्नुयात् तेन कर्म्मणा॥ ३४
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः।
तयोःप्रत्युपकारोऽपि न हि कश्चन विद्यते॥ ३५
तयोर्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा।
न ताभ्यामननुज्ञातो धर्म्ममेकं समाचरेत्॥ ३६
वर्ज्जयित्वा मुक्तिफलं नित्यनैमित्तिकं तथा।
धर्म्मसारः समुद्दिष्टः प्रेत्यानन्दफलप्रदः॥ ३७
सम्यगाचारवक्तारं विसृष्टस्तदनुज्ञया।
शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चापद्यते दिवि॥ ३८
यो भ्रातरं पितृसमं ज्येष्ठं मूढ़ोऽवमन्यते।
तेन दोषेण संप्रेत्य निरयं संप्रयच्छति॥ ३९
पुंसाञ्चात्मनिवेशेण पूज्यो भर्त्ता च सम्मतः।
यानि दातरि लोकेऽस्मिन्नुपकारोऽपि गौरवम्॥ ४०
ये नरा भर्त्तृपिण्डार्थं स्वान् प्राणान् सन्त्यजन्ति हि।
तेषामेव पराँल्लोकानुवाच भगवान् भृगुः॥ ४१
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजान् गुरून्।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः॥ ४२
अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्।
भोःशब्दपूर्व्वकञ्चैनमभिभाषेत धर्म्मवित्॥ ४३
अभिवाद्यश्च पूर्व्वन्तु शिरसावद्यशर्म्म च।
ब्राह्मणक्षत्रियाद्यैश्च श्रीकामैः सादरं सदा॥ ४४
नाभिवाद्यास्तु विप्राणां क्षत्रियाद्याः कथञ्चन।
ज्ञानकर्म्मगुणोपेता यद्यप्येते बहुश्रुताः॥ ४५

ब्राह्मणः सर्व्ववर्णानां स्वस्ति कुर्य्यादिति स्थितिः।
सवर्णेऽप्यसवर्णानां कार्य्यमेवाभिवादनम्॥ ४६
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्व्वस्याभ्यागतो गुरुः॥ ४७
विद्या कर्म्म वयो वन्धुर्व्वित्तं भवति यस्य वै।
मान्यस्थानानि पञ्चाहुः पूर्व्वं पूर्व्वं गुरूणि च॥ ४८
पञ्चानां त्रिषु वर्णेषु भवेत्तुगुणवान् हि यः।
यत्रस्यात्सोऽत्रमानार्हः शुद्रोऽपिसभवेद् यदि॥ ४९
पिण्डादेभ्यो ब्राह्मणेभ्यः स्त्रियै राज्ञेऽस्य चक्षुषे।
वृद्धाय भारहीनाय रोगिणे दुर्व्वलाय च॥ ५०
भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम्।
निवेद्य गुरुवेऽश्नीयाद्वाग्यतस्तदनुज्ञया॥ ५१
भवत्पूर्व्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्॥ ५२
मातरं वा स्वसारं वा मातुर्व्वा भगिनीं तथा।
भिक्षेत भिक्षां प्रथमं यातु नैनं विमानयेत्॥ ५३
सजातीयगृहेष्वेवं सार्व्ववर्णिकमेव वा।
भैक्षस्याचरणं प्रोक्तं पतितादिषु वर्ज्जितम्॥ ५४
वेदयज्ञाद्यहीनानां प्रशस्तानां स्वकर्म्मसु।
ब्रह्मचारी चरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम्॥ ५५
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।
अभावेऽप्यथ गेहानां पूर्व्वं पूर्व्वं विवर्ज्जयेत्॥ ५६
सर्व्वं वापि चरेद्ग्रामं पूर्व्वोक्तानामसम्भवे।
नियम्य प्रयतो वाचं दिशश्चानवलोकयन्॥ ५७

समाहृत्य तु तद्भैक्षं यावदर्थमिहाज्ञया।
भुञ्जीत प्रयतो नित्यं वाग्यतो नान्यमानसः॥ ५८
भैक्षेण वर्त्तयेन्नित्यं कामनाशीर्भवेद्व्रती।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता॥ ५९
पूजयेदशनं नित्यमद्यादन्नमकुत्सयन्।
दृष्ट्वा हृष्येत् प्रमोदेच्च प्रतिनन्देच्च सर्व्वतः॥ ६०
अनारोग्यमनायुष्यमस्वर्ग्यं कुत्सभोजनम्।
अपुण्यं लोकविद्विष्टं तस्मात् तत् परिवर्ज्जयेत्॥ ६१
प्राङ्मुखोऽन्नानि भुञ्जीत दक्षिणमुख एव वा।
नाद्यादुदङ्मुखो नित्यं विधिपूर्व्वं सनातनं॥ ६२
प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत्।
शुचौ देशे समासीनोभुक्त्वान्ते द्विरुपस्पृशेत्॥ ६३
मण्डलं पूर्व्वतः कृत्वा तत्र स्वाध्याय भोजयेत्।
स्वप्राणाहुतिपर्य्यन्तं मौननेवं विधीयते॥ ६४

इत्यौशनसस्मृतौ प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः।

भुक्त्वा पीत्वा च स्नात्वा च तथा रथ्योपसर्पणे।
ओष्ठावलोमको स्पृष्ट्वा वासो विपरिधाय च॥ १
रेतोमूत्रपुरीषाणामुत्सर्गेणान्यभाषणे।
तथा चाध्ययनारम्भे कासश्वासागमे तथा॥ २
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः।
सन्ध्ययोरुभयोस्तद्वदाचान्तः चाचमेत् पुनः॥ ३

चण्डालम्लेच्छसम्भासे स्त्रीशूद्रोच्छिष्टभाषणे।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं वापि तथाविधम्॥ ४
अश्रुपाते तथाचामि अनृतस्य तथैव च।
भोजनान्ते सन्ध्ययोः स्नात्वा पीत्वा मूत्रपुरीषयोः॥ ५
आचान्तोऽप्याचमेत् स्पृष्ट्वा सकृत् सकृदथान्यतः।
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयत एव वा॥ ६
नृणामथात्मनः स्पर्शे नीवीं विपरिधाय च।
उपस्पृशेज्जलं शुष्कं तृणं वा भूमिमेव वा।
केशानाञ्चात्मनः स्पर्शे वाससां चालितस्य च॥ ७
अनुष्णाभिरफेनाभिरदुष्टाभिश्च सर्व्वशः।
शौचेप्सुः सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः॥ ८
शिरः प्रावृत्य कर्णं वा मुक्तकच्छशिखोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥ ९
सोपानत्को जलस्थो वा नोष्णीषीवाचमेद्बुधः।
न चैव वर्षधाराभिर्न तिष्ठन् न धृतोदकैः॥ १०
नैकहस्तार्पितजलैर्विना शूद्रेण वा पुनः।
न पादुकासनस्थो वा बहिर्जानुरथापि वा॥ ११
न जल्पन् न हसन् प्रेक्षमाणश्च प्रह्व एव वा।
नावीक्षमाणाद्भिर्नोष्णाद्भिर्न फेनादथापि वा॥ १२
शूद्राशुचिकरैर्मुक्तैर्नक्षाराभिस्तथैव च।
न चैवाङ्गुलिभिः शब्दमकुर्व्वन् नान्यमानसः॥ १३
न वर्णरसदुष्टाभिर्नचैव प्रदरोदकैः।
न प्राणिजनिताभिर्व्वा न बहिः कालमेव वा॥ १४

हृद्गाभिः पूयते विप्रः कण्ठाभिः क्षत्रियः शुचि ।
प्राशिताभिस्तथा वैश्यः स्त्री शूद्रः स्पर्शनन्ततः ॥ १५
अङ्गुष्ठमूलान्तरतो रेखायां ब्रह्म उच्यते ।
अन्तराङ्गुष्ठदेशिन्योः पितॄणां तीर्थमुत्तमम् ॥ १६
कनिष्ठो मूलतः पश्चात्प्राजापत्यं प्रचक्षते ।
अङ्गुल्यग्रे स्मृतं दैवं तथैवार्षं प्रकीर्त्तितम् ॥ १७
मूले स्याद्दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतम् ।
तदेवं सौमिकं तीर्थमेतत्ज्ञात्वा न मुह्यति ॥ १८
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् ।
कायेन वा दैवतेन न तु पित्रेण वा द्विजाः ॥ १९
त्रि प्राश्नीयादपः पूर्व्वं ब्राह्मणः प्रयतः स्मृतः ।
संवृत्ताङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत् ॥ २०
अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नेत्रद्वयं ततः ।
तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटं ततः ॥ २१
कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ।
सर्व्वासामथ योगेन हृदयन्तु तलेन वा ॥ २२
संस्पृशेद्वै शिरस्तद्वदङ्गुष्ठेनाथवा द्वयम् ।
त्रिः प्राश्नीयादेवमेव प्रीतास्तेनास्य देवताः ॥ २३
ब्रह्माविष्णुमहेशाश्च सम्भवन्त्यनुशुश्रुमः ।
गङ्गा च यमुना चैव प्रीयते परिमार्ज्जनात् ॥ २४
प्रसंस्पर्शाल्लोचनयोः प्रीयते शशिभास्करौ ।
नासत्यौ चैव प्रीयेते स्पृष्टे नासापुटद्वये ॥ २५
कर्णयोः स्पृष्टयोस्तद्वत् प्रीयेते चानलानिलौ ।
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्व्वदेवताः ॥ २६

मूर्द्धि संस्पर्शनादेव प्रीतस्तु पुरुषो भवेत्।
नोच्छिष्टं कुर्व्वते मुख्याविप्रुषोऽङ्गं नयन्ति याः ॥ २७
अन्तवद्दन्तसंलिप्तजिह्वास्पर्शोऽशुचिर्भवेत्।
स्पृशन्ति बिन्दवः पादौ य आचामयतः परम् ॥ २८
भूमिगास्तु समा ज्ञेयाः न तैरप्रयतो भवेत्।
मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे ॥ २०
फलमूलेक्षुदण्डे च न दोषः उशनाब्रवीत्।
प्रचरंश्चान्नपानेषु यदुच्छिष्टो भवेद्द्विजः ॥ ३०
भूमौ निक्षिप्य तद्द्रव्यमाचम्य प्रोक्षयेत्तु यत्।
तैजसं वै समादाय भवेदुच्छेषणात्ततः ॥ ३१
अनिधाय च तद्द्रव्यमाचान्तः शुचितामियात्।
वस्त्रादीनां विकल्पत्वात् स्पृष्ट्वा चेदेवमेव हि ॥ ३२
आरभ्यानुदके रात्रौ चोरो वाप्याकुले पथि।
कृत्वा मूत्रपुरीषं वा द्रव्यहस्तेन दुष्यति ॥ ३३
निधाय दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः।
अथ कुर्य्यात् शकृन्मूत्रे रात्रौ चेद्दक्षिणमुखः ॥ ३४
अन्तर्द्धाय महीं काष्ठैः पर्णैर्लोष्टतृणेन वा।
प्रतिस्रोनशिराः कुर्य्यात् शकृन्मूत्रविसर्ज्जने ॥ ३५
छायाकूपनदीगोष्टे चैत्याम्भः पथि भस्मसु।
अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत् ॥ ३६
न गोमये न कृष्टे वा न गोष्ठे नैव शाद्वले।
न तिष्ठन् वा न निर्व्वासा न च पर्व्वतमस्तके ॥ ३७
न जीर्णदेवायतने न वल्मीके कदाचन।
न ससत्त्वेषु गर्त्तेषु न च गच्छन् समाचरेत् ॥ ३८

तुषाङ्गारकपालेषु राजमार्गे तथैव च ।
न क्षेत्रे न विले चापि न तीर्थे च चतुष्पथे ॥ ३९
नोद्यानोपसमीपे वा नोषरे न पराशुचौ ।
न सोपानत्कपादश्च च्छत्री वानान्तरीक्षके ॥ ४०
न चैवाभिमुखे स्त्रीणां गुरुब्राह्मणयोर्गवाम् ।
न देवदेवालययोर्नापामपि कदाचन ॥ ४१
नदीज्योतींषि वीचित्वा तद्वाद्याभिमुखोऽपि वा ।
प्रत्यादित्यं प्रत्यनिलं प्रतिसोमं तथैव च ॥ ४२
आहृत्य मृत्तिकां कुर्य्याल्लेपगन्धापकर्षणम् ।
कुर्य्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥ ४३
नाहरेन्मृत्तिकां विप्रः पांशुलां न च कर्द्दमात् ।
न मार्गान्नोषराद्देशाच्छौचशिष्टां परस्य च ॥ ४४
न देवायतनात् कुद्यादग्रामान्न तु कदाचन ।
उपस्पृशेत्ततो नित्यं पूर्व्वोक्तेन विधानतः ॥ ४५
भारव्याहृतिगायत्र्या वर्णनामिरणैः क्रमात् ।
तन्मन्त्रितं पिबेद्यस्तु मन्त्राचमनमीरितम् ॥ ४६
गायत्र्याचमनेनाथ श्रुत्याचमनमीरितम् ॥ ४७

इत्यौशनसस्मृतौ द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

एवं देहादिभिर्युक्तः शौचाचारसमन्वितः ।
आहृत्याध्ययनं कुर्य्याद्वीक्षमाणो गुरोर्मुखम् ॥ १

नित्यमुद्यतपाणिश्च सन्ध्याचारसमन्वितः।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः॥ २
प्रतिश्रवणसम्भाषे शयाणो न समाचरेत्।
आसीनो न च भुञ्जानो न तिष्ठन् पराम्मुखः॥ ३
नोच्चं शय्यासनञ्चास्य सर्व्वदा गुरुसन्निधौ।
गुरोस्तु चक्षुर्व्विषये न यथेच्छासनो भवेत्॥ ४
नोदाहरेदस्य नाम परोक्षमपि केवलम्।
न चैवास्यानुकुर्व्वीत गतिभाषणचेष्टितम्॥ ५
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं परितोऽन्यतः॥ ६
दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः।
न चैवास्योत्तरं ब्रूयान्न तेनासीत सन्निधौ॥ ७
उदकुम्भं कुशान् पुष्पं समिधोऽप्याहरेत् सदा।
मार्ज्जनं लेपनं नित्यमङ्गानां वै समाचरेत॥ ८
नास्य निर्म्माल्यशयनं पादुकोपानहावपि।
आक्रामेदासनं तस्य च्छायामपि कदाचन॥ ९
दन्तकाष्ठादिकं लब्ध्वा न चास्य विनिवेदयेत्।
अनापृच्छ्य न गन्तव्यं न त्वप्रियहिते रतः॥ १०
न पादौ स्थापयेदस्य सन्निधाने कदाचन।
जृम्भितं हसितञ्चैव चवकं प्रावरं तथा॥ ११
वर्ज्जयेत् सन्निधौ नित्यं नखस्फोटनमेव च।
यथाकालमधीयीत यावन्न विमना गुरुः॥ १२
आसने शयने याने न च तिष्ठेत् कदाचन।
धावन्तमनुधावेत गच्छन्तमनुगच्छति॥ १३

गजोष्ट्रयानप्रासादप्रस्तर शकटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलतलेषु च ॥ १४
जितेन्द्रियः स्यात् सततं वश्यात्माक्रोधनः शुचिः ।
प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥ १५
गन्धमाल्यंरसं कन्यां सूक्ष्मप्राणिविहिंसनम् ।
अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ॥ १६
कामं क्रोधं भयं निद्रां गीतवादित्रनर्त्तनम् ।
द्यूतं जनपरीवादं स्त्रीप्रेक्षालापनं तथा ॥ १७
परोपतापपैशुन्यं प्रयत्नेन विवर्ज्जयेत् ।
उदकुम्भं सुमनसो गोसकृन्मृत्तिकान् कुशान् ॥ १८
आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत् ।
तथैव लवणं सर्व्वं भक्ष्यं पर्य्युषितं न यत् ॥ १९
अनन्यदर्शी सततं भवेद्गीतादिनिःस्पृहः ।
नादर्शञ्चैव वीक्षेत न चरेद्दन्तधावनम् ॥ २०
एकान्तमशुचिः स्त्रीभिः शूद्राद्यैरभिभाषणम् ।
गुरूच्छिष्टं भेषजार्थं न प्रभुञ्जीत कामतः ॥ २१
मलापकर्षणं स्नानं नाचरेद्‌ वै कदाचन ।
न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ २२
विद्यागुरुष्वेतदेव नित्यवृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु वा धर्म्मं हितञ्चोपदिशत्स्वयम् ॥ २३
श्रेयःसु गुरुवद्‌वृत्तिनित्यमेवं समाचरेत् ।
गुरुपत्नीषु पुत्रेषु गुरोश्चैव स्वबन्धुषु ॥ २४
बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मसु ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥ २५

उत्सादनं वै गात्राणां स्नानञ्चोच्छिष्टभोजने।
न कुर्य्याद्गुरुपुत्रस्य पादयोः शौचमेव च ॥ २६

गुरुवत् प्रतिपूज्यास्तु सवर्णा गुरुयोषितः।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ २७

अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥ २८

गुरुपत्नी च युवती नाभिवाद्येह पादयोः।
कुर्व्वीत वन्दनं भूम्यामसावहमिति ब्रुवन् ॥ २९

विप्रस्य पादग्रहणमन्वहञ्चाभिवादनम्।
गुरुदारेषु कुर्व्वीत सदा धर्म्ममनुस्मरन् ॥ ३०

मातृष्वसा मातुलानी श्वश्रूश्चापि पितृष्वसा।
सम्पूज्या गुरुपत्नी च समस्ता गुरुभार्य्या च ॥ ३१

भ्रातृभार्य्योपसंग्राह्या ज्ञातिसम्बन्धियोषितः।
पितुर्भगिन्या मातुश्च जायायाञ्च स्वसर्य्यपि ॥ ३२

मातृवद्वृत्तिमातिष्ठे न्माता तेभ्यो गरीयसी।
एवमाचारसम्पन्नमात्मवन्तं सदाहितम् ॥ ३३

वेदं धर्म्मं पुराणञ्च तथा तत्त्वानि नित्यशः।
संवत्सरोषिते शिष्ये गुरुर्ज्ञानं विनिर्द्दिशेत् ॥ ३४

हरति दुष्कृतं तस्य शिष्यस्य वत्सरे गुरुः।
आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः ॥ ३५

आप्तः शक्तोऽर्थदः साधुः सोऽध्याप्या दश धर्म्मतः।
कृतज्ञश्च तथाद्रोही मेधावी शुभकृन्नरः ॥ ३६

प्राप्य विप्रोऽप्यविधिवत् षड़ध्याप्या द्विजोत्तमैः।
एतेषु ब्रह्मणो दानमन्यत्र न यथोदितम् ॥ ३७

आचम्य संयतो नित्यमधीयीत उदङ्मुखः।
उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम्॥ ३८
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति वाचयेत्।
प्राक्कुशेषु समासीनः पवित्रैरवपावितः॥ ३९
प्राणायामैस्त्रिभिः पूर्वं तथाचोङ्कारमर्हति।
ब्राह्मणः प्रणवं कुर्य्यादन्ते च विधिवद्द्विजः॥ ४०
कुर्य्यादध्ययनं नित्यं ब्रह्माञ्जलिकृतस्थितिः।
सर्व्वेषामेव भूतानां वेदश्चक्षुः सनातनः॥ ४१
अधीते विधिवन्नित्यं ब्रह्मण्याच्यवतेऽन्यथा।
योऽधीयीत ऋचो नित्यं क्षीराहुत्या स देवताः॥ ४२
प्रीणाति तर्पयन्त्येनं कामैस्तृप्ताः सदैव हि।
यजुर्योऽधीते सततं दध्ना प्रीणाति देवताः॥ ४३
सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम्।
अथर्व्वाङ्गिरसो नित्यमध्यात् प्रीणाति देवताः॥ ४४
धर्म्माङ्गाणि पुराणानि मीमांसैस्तृप्यते सुरान्।
अपां समीपे नियतो नैत्यकं विधिमाश्रितः॥ ४५
गायत्रीमप्यधीयीत गत्वारण्यं समाहितः।
सहस्रपरमां देवीं शतमध्यां दशापराम्॥ ४६
गायत्रीं वै जपेन्नित्यं जपश्च त्रिः प्रकीर्त्तितः।
गायत्रीश्चैव वेदांश्च तुलया तुलयन् प्रभुः॥ ४७
एकतश्चतुरो वेदान् गायत्रीञ्च तथैकतः।
ओङ्कारमादितः कृत्वा व्याहृतीस्तदनन्तरम्॥ ४८
ततोऽधीयीत एकाग्रं श्रिया परयान्वितः।
अध्यापयेत्तु एकाग्रं गायत्रीपरया धिया॥ ४९

पूराकल्पे समुत्पन्ना भूर्भुवःस्वर्गनामतः ।
महाव्याहृतयस्तिस्रः सर्व्वाशुभनिवर्हणाः ॥ ५०
प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः काला व्याहृतयस्त्रयः ॥ ५१
ओङ्कारस्तत् परं ब्रह्म गायत्री स्यात्तदक्षरम् ।
एवं मन्त्रो महायोगसाक्षात्सार उदाहृतः ॥ ५२
योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम् ।
विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥ ५३
न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते ।
श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ॥ ५४
आषाढ्यां प्रौष्ठपद्यां वा वेदोपक्रमणं स्मृतम् ।
उत्सृज्य ग्रामनगरं मासान् विप्रोऽर्द्धपञ्चमान् ॥ ५५
अधीयीत शुचौ देशे ब्रह्मचारी समाहितः ।
पुष्ये तु छन्दसां कुर्य्याद्वहिरुत्सर्ज्जनं द्विजाः ॥ ५६
माघे वा मासि सम्प्राप्ते पूर्व्वाह्णे प्रथमेऽहनि ।
छन्दांस्यूर्द्ध्वमधीयीत शुक्लपक्षे तु वै द्विजाः ॥ ५७
वेदाङ्गानि पुराणं वा कृष्णपक्षे तु मानवः ।
इमान्नित्यमनध्यायानधीयानो विसर्ज्जयेत् ॥ ५८
अध्यापनञ्च कुर्व्वाणः अध्येष्यन्नपि यत्नतः ।
कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने ॥ ५९
विद्युत्स्तनितवर्षासु महोल्कानाञ्च पातने ।
आकालिकमनध्यायमेतेष्वेव प्रजापतिः ॥ ६०
एतांस्त्वभ्युदितान् विद्याद्यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥ ६१

निर्घाते वातचलने ज्योतिषाञ्चोपसर्पणे ।
एतानाकालिकान् विद्यादनध्यायानृतावपि ॥ ६२
प्रादुष्कृतेष्वग्निषु च विद्युत्स्तनितनिस्वने ।
सद्यो हि स्यादनध्यायमनृतौ मुनिरब्रवीत् ॥ ६३
नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च ।
कर्म्मनेपुण्यकामानां पूतिगन्धे च नित्यशः ॥ ६४
अन्त्यानां सङ्गते ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायो रुद्यमाने समवाये जनस्य च ॥ ६५
उदके मध्यरात्रौ च विण्मूत्रे च विसर्ज्जयेत् ।
उच्छिष्टश्राद्धभुक् चैव मनसा न विचिन्तयेत् ॥ ६६
प्रतिगृह्य द्विजो विद्यानेकोद्दिष्टस्य केतनम् ।
त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके ॥ ६७
यावदेकानुदिष्टस्य लेपो गन्धश्च तिष्ठति ।
विप्रस्य विदुषो देहे तावद् ब्रह्म न कीर्त्तयेत् ॥ ६८
शयानः प्रौढ़पादश्च कृत्वा वै वावसक्थिकाम् ।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥ ६९
नीहारैर्व्वाणशब्देश्च सन्ध्ययोरुभयोरपि ।
अमावस्यां चतुर्द्दश्यां पौर्णमास्यष्टमीषु च ॥ ७०
उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ।
अष्टकासु न कुर्व्वीत ऋत्वन्तासु न रात्रिषु ॥ ७१
मार्गशीर्षे तथा पौषे माघे मासि तथैव च ।
तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे च सूरिभिः ॥ ७२
श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥ ७३

समानविद्योऽनुमृते तथा सब्रह्मचारिणि ।
आचार्य्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम् ॥ ७४
छिद्रेष्वेतेषु विप्राणामनध्यायाः प्रकीर्त्तिताः ।
हिंसन्ति राक्षसास्तां च तस्मादेतान् विवर्ज्जयेत् ॥ ७५
नैत्यके नास्त्यनध्यायः सन्ध्योपासने एव च ।
उपाकर्म्मणि कर्म्मान्ते होममन्त्रेषु चैव हि ॥ ७६
एकामृचमथवैकं वा यजुः सामाथवा पुनः ।
अष्टकायां स्वधीयीत मारुते चापि वापदि ॥ ७७
अनध्यायो नचाङ्गेषु नेतिहासपुराणयोः ।
न धर्म्मशास्त्रेष्वन्येषु पर्व्वण्येतानि वर्ज्जयेत् ॥ ७८
एष धर्म्मः समासेन कीर्त्तितो ब्रह्मचारिणः ।
ब्राह्मणाभिहितः पूर्व्वमृषीणां भावितात्मनाम् ॥ ७९
योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः ।
स वै मूढ़ो न सम्भाष्यो वेदवाह्यो द्विजातिभिः ॥ ८०
न वेदपाठमात्रेण सन्तुष्टो वै द्विजोत्तमः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥ ८१
योऽधीत्य विधिवद्वेदं वेदान्तं न विचारयेत् ।
स सान्वयः शूद्रकल्पः स पात्रं न प्रपद्यते ॥ ८२
यदि वात्यन्तिकं वासं कर्त्तुमिच्छति वै गुरोः ।
युक्तः परिचरेदेनमा शरीरविमोक्षणात् ॥ ८३
गत्वा वनं वा विधिवज्जुहुयाज्जातवेदसम् ।
अधीयीत सदा नित्यं ब्रह्मविद्यां समाहितः ॥ ८४
सावित्रीं शतरुद्रीयं वेदानाञ्च विशेषतः ।
अभ्यसेत् सततं वेदं भस्मस्नानपरायणः ॥ ८५

आत्रा उपलब्धास्तासां परित्यागस्तैश्च न संवसेदुदीचीं दिशं गत्वानश्नन् संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते।

अथाप्युदाहरन्ति।

शरीरपातनाच्चैव तपसाध्ययनेन च। मुच्यते पापकृत् पापाद्दानाच्चापि प्रमुच्यते॥ इति विज्ञायते।

इति वासिष्ठे धर्म्मशास्त्रे विंशोऽध्यायः॥ २०॥

---

## एकविंशोऽध्यायः।

शूद्रश्चेद् ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते। वैश्यश्चेद् ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरथमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते। राजन्यश्चेद् ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरोवापनं कारयित्वा सर्पिषाभ्यज्य नग्नां रक्तखरमारोप्य महापथमनुव्राजयेत्। एवं वैश्ये राजन्यायां शूद्रश्च राजन्यावैश्ययोर्म्मनसा भर्त्तुरतिचारे त्रिरात्रं यावकं चीरं भुञ्जानाधःशयाना त्रिरात्रमप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्वाजुहुयात् पूता भवतीति विज्ञायते।

इति वासिष्ठे धर्म्मशास्त्रे एकविंशोऽध्यायः॥ २१॥

---

वसिष्ठसंहिता सम्पूर्णा।